श्रीमद्बादरायणप्रणीतं

# ॥ ब्रह्मसूत्रम् ॥

सर्वभाष्यकारधृतपाठभेदसहितम्

विश्वभारत्यां भूतपूर्वेण व्याकरणोपाध्यायेन

श्रीकपिलेश्वरमिश्रेण

सङ्कलितम्

तत्रैव पालिसंस्कृतोपाध्यायेन

श्रीनित्यानन्दविनोदगोस्वामिना

संस्कृतम्

वि॰ सं॰ १६८८

MUNSHI RAM MANOHAR LAL
SANSKRIT & HINDI BOOK SELLERS
NAI SARAK, DELHI-6.

# सूची

# सङ्केतविवृतिः

| | | | |
|---|---|---|---|
| नि. | निम्बार्कः | ... | Chaukhamba Sanskrit Series Benares, ( Sambat, 1967. ) |
| नि$^{2}$ | " | ... | Published by N. S. Bramhachari, Brindavan. |
| बल. | बलदेवः | ... | Shyamlal Goswami, Calcutta, B. S. 1301. |
| भा. | भास्कराचार्यः | ... | Chaukhamba Sanskrit Series, Benares, 1903. |
| म. | मध्वाचार्यः | ... | Edited by Kalivara Vedanta-vagisha, Calcutta, 1876. |
| रा. | रामानुजाचार्यः | ... | R. Venkteswar & Co., Anandamudrayantralaya, 1909. |
| व. | वल्लभाचार्यः | ... | Asiatic Society of Bengal, Calcutta, 1897. |
| वि. | विज्ञानभिक्षुः | ... | Chaukhamba Sanskirit Series, Benares, 1910. |
| श्री. | श्रीकण्ठः | ... | Govt. Oriental Series, Mysore, 1903. |

| | |
|---|---|
| अधि | अधिकं पठ्यते । |
| ना | नास्ति । |
| परतः | परसूत्राद् गृहीत्वा पठ्यते । |
| परेण | परेण सूत्रेण सह पठ्यते । |
| पूर्वतः | पूर्वसूत्राद् गृहीत्वा पठ्यते । |
| पूर्वेण | पूर्वसूत्रेण सह पठ्यते । |

## FOREWARD

Once when I was making an attempt at a comparative and critical study of the Brahmasūtras it was at once found that according to different commentators there were various devergencies of the readings of the sūtras, some taking one sūtra as two, or two as one, or adding the last word of a sūtra to the beginning of the following one, or adding some new sūtras, or substituting one letter or word for another in them, thus making room for divergent interpretations. Let us give here a few examples : While other commentators, such as Śaṅkara, Rāmānuja, and so on, read *janmādy asya yataḥ* and *śāstrayonitvāt* (I. 1. 2, 3) as two different sūtras, Vallabha takes them as one. For *heyatva-vacanāc ca* (I. 1. 8) Baladeva disagreeing with others reads *heyatvaṃ vacanāc ca.* Moreover, after *heyatvavacanāc ca* Nimbārka, Rāmānuja, and Śrīkaṇṭha add *pratijñāvirodhāt.* For *antaryāmy adhidaivādiṣu* (I. 2. 18) Rāmānuja, Śrīkaṇṭha, and Bhāskara have *adhidaivādhilokādiṣu,* while Nimbārka reads *adhidaivādhidevādilokādiṣu* Mādhva has, however, *adhidevādiṣu.* Such is the case throughout the book.

I discussed the matter with my former colleague, Pandit Kapileshvara Mishra, who served here for some years as a lecturer in Sanskrit grammar, and suggested to him to prepare an edition of the Brahmasūtras showing their variations as can be gathered from different commentaries. He readily accepted my suggestion and the result of his labour is now placed

before the public. It remains now for a scholar to reconstruct the Brahma sūtras according to the light arising from the present work, for which Pandit Kapileshvara has devoted so much of his time and energy.

In preparing this edition of the Brahma sūtras the commentaries of the following authors have been consulted: Śaṅkara, Bhāskara, Rāmānuja, Nimbārka, Mādhva, Vallabha, Śrīkaṇṭha, Vijñānabhikṣu, and Baladeva. Śaṅkara's reading has been taken as the standard.

My pupil and colleague, Pandit Nitaivinod Goswami has seen the book through the press, for which we offer him our best thanks.

Vidyabhavana,<br>Visvabharati,<br>August, 1391.

VIDHUSHEKHARA BHATTACHARYA.

# उपोद्घातः

मया किलैकदा यथामति यावच्छक्यं च सूक्ष्मेक्षिकया तुलनया च ब्रह्मसूत्राण्यनुशीलयितुकामेन तानि तानि भाष्याणि पर्यालोचयितुं प्रवृत्तेन सपद्येव निरीक्षितं यद्भाष्यभेदेन सूत्रपाठा अपि सुबहवो भिद्यन्ते। तथा हि—क्वचिदेकमेव सूत्रं द्वे, द्वे वैकम्। क्वचित्पूर्वस्य सूत्रस्यान्तिमं पदं परस्य सूत्रस्यादौ। क्वचिदधिकमेव सूत्रम्। क्वचिद्वैकस्य सूत्रस्य वर्णविशेषो वा पदविशेषो वान्य एव। सन्त्येवमपरेऽपि भेदाः। अत्रेदं किञ्चिदुदाह्रियते। "जन्माद्यस्य यतः," "शास्त्रयोनित्वात्" (१, १, २, ३) इति द्वे सूत्रे शङ्कर-रामानुजादीनाम्। वल्लभः पुनर्द्वे अप्येते एकं कृत्वा पठति। "हेयत्ववचनाच्च" (१ १·३) इत्येव सर्वेषां भाष्यकाराणां पाठः। बलदेवस्तु पठति "हेयत्वं वचनाच्च" इति। किञ्च निम्बार्क-रामानुज श्रीकण्ठाः "हेयत्ववचनाच्च" इत्यत्र "प्रतिज्ञाविरोधाद्" इत्यधिकमधीयते। "अन्तर्याम्यधिदैवादिषु" (१ २ १३) इति सूत्रे "०अधिदैवाधिलोकादिषु" इति भास्कर-रामानुज-श्रीकण्ठाः, निम्बार्कः पुनः "०अधिदैवाधिदेवादिलोकादिषु" इति, माध्वस्तु "०अधिदेवादिषु" इति। एवमन्यत्रापि बहु।

तदेतद्विचारितं मया मद्बन्धुना कानि चिद्वर्षाणीह पाणिनीयव्याकरणाध्यापकपदमधिष्ठितवता पण्डित श्रीकपिलेश्वरमिश्रेण। स च मया प्रार्थितः पाठभेदप्रदर्शनाय ब्रह्मसूत्रसङ्कलनमिदं महतानन्देनारभत। तस्यैव फलमिदमिदानीं वाचकेभ्य उपह्रियते। अथ कश्चिदेतत्परिशीलनेन ब्रह्मसूत्राणां मूलं स्वरूपं विनिर्णयेत्, प्रयतेत वा तदर्थं सफलः स आरम्भः सङ्कलयितुः पण्डितस्य श्रीकपिलेश्वरस्येति मन्येत।

एते ते भाष्यकारा येषां भाष्याणीह समीक्षितानि—शङ्करः, भास्करः, रामानुजः निम्बार्कः, माध्वः, वल्लभः, श्रीकण्ठः, विज्ञानभिक्षुः, बलदेवश्च। शङ्करस्यैव पाठं मूले सन्निवेश्यान्येषां पाठभेदाष्टीप्पण्यां प्रदर्शिताः।

ममातिप्रियशिष्येण श्रीनित्यानन्दविनोदगोस्वामिना पुस्तकमिदं मुद्रापत्रसंशोधनादिकर्मणा संस्कृतमिति परःशतास्तस्मै नः साधुवादाः।

विश्वभारती-विद्याभवनम्,<br>वि० सं० १९८८,<br>श्रावणशुक्लदशमी।

विधुशेखरभट्टाचार्यः।

# ॥ ब्रह्मसूत्रम् ॥

## प्रथमोऽध्यायः

### प्रथमः पादः

अथातो ब्रह्मजिज्ञासा ॥ १

जन्माद्यस्य यतः ॥ २

शास्त्रयोनित्वात् ॥ ३

तत्तु समन्वयात् ॥ ४

ईक्षतेर्नाशब्दम् ॥ ५

गौणश्चेन्नात्मशब्दात् ॥ ६

तन्निष्ठस्य मोक्षोपदेशात् ॥ ७

हेयत्वावचनाच्च ॥ ८

स्वाप्ययात् ॥ ९

गतिसामान्यात् ॥ १०

श्रुतत्वाच्च ॥ ११

आनन्दमयोऽभ्यासात् ॥ १२

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३

तद्धेतुव्यपदेशाच्च ॥ १४

मान्त्रवर्णिकमेव च गीयते ॥ १५

नेतरोऽनुपपत्तेः ॥ १६

भेदव्यपदेशाच्च ॥ १७

कामाच्च नानुमानापेक्षा ॥ १८

---

२ । व. परेण ।

३ । व. पूर्वेण ।

८ । बल. ०यत्वव ० ; रा. श्री. नि. अधि. "प्रतिज्ञाविरोधात्" ॥

१५ । व ०च गम्यते ।

१७ । बल. ०देशात् ।

अस्मिन्नस्य च तद्योगं शास्ति ॥ १९

अन्तस्तद्धर्मोपदेशात् ॥ २०

भेदव्यपदेशाच्चान्यः ॥ २१

आकाशस्तल्लिङ्गात् ॥ २२

अत एव प्राणः ॥ २३

ज्योतिश्चरणाभिधानात् ॥ २४

छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ २५

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७

प्राणस्तथानुगमात् ॥ २८

न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २९

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३०

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासा[1]-

त्रैविध्या[2]दाश्रितत्वादिह तद्योगात् ॥ ३१

---

## द्वितीयः पादः

सर्वत्र प्रसिद्धोपदेशात् ॥ १

विवक्षितगुणोपपत्तेश्च ॥ २

अनुपपत्तेस्तु न शारीरः ॥ ३

कर्मकर्तृव्यपदेशाच्च ॥ ४

---

२५। रा. नि. ०र्पण निगमात्त। निम्बार्कभाष्ये "चेतोऽर्पणाभिधानात्" इत्युक्तेः "०र्पणनिगदाद्" इत्येव पाठो मूल इति प्रतिभाति। वेदान्तकौस्तुभे "०र्पणनिगदात्" इत्येव पाठः। वेदान्तकौस्तुभप्रभायान्तु "०र्पणनिगमाद्" इति। उत्तरस्य तु सूत्रस्य भाष्ये "०र्पणनिगमात्"इति दृश्यते। तदेतत्पूर्वसूत्रेण न सम्बध्यते ॥

३१। १ म. ०पासनात्रै० । २ भा. ०त्रैविध्यात् ॥

४। श्री. ०देशात् ॥

शब्दविशेषात् ॥ ५

स्मृतेश्च ॥ ६

अर्भकौकस्त्वात्तद्व्यपदेशाच्च[1] नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७

सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८

अत्ता चराचरग्रहणात् ॥ ९

प्रकरणाच्च ॥ १०

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११

विशेषणाच्च ॥ १२

अन्तर उपपत्तेः ॥ १३

स्थानादिव्यपदेशाच्च ॥ १४

सुखविशिष्टाभिधानादेव च ॥ १५

श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६

अनवस्थितेरसम्भवाच्च नेतरः ॥ १७

अन्तर्याम्यधिदैवादिषु[1] तद्धर्मव्यपदेशात् ॥ १८

न च स्मार्तमतद्धर्माभिलापात् ॥ १९

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २०

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२

रूपोपन्यासाच्च ॥ २३

वैश्वानरः साधारणशब्दविशेषात् ॥ २४

स्मर्यमाणमनुमानं स्यादिति ॥ २५

---

७ । १ नि. ०शाच्चेति च० । भा. ०शान्नेति० ॥

१४ । रा. श्री. अधि. "अत एव च स ब्रह्म" ॥ नि. अधि. "अत एव च तद् ब्रह्म" ॥

१८ । १ रा. श्री. भा. नि. ०धिदैवाधिलोकादिषु त० ॥ नि. ०धिदैवाधिदेवादि-लोकादिषु त० ॥ म. ०धिदेवादिषु० ॥

१९ । रा. श्री. परतः "०शारीरश्च" ॥

२० । रा. श्री. पूर्वंश "शारीरश्च" ॥

२२ । नि. ०भ्यान्नेतरौ ॥

२३ । बल. अधि. "प्रकरणात्" ॥

शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च[1] नेति चेन्न
तथादृष्ट्युपदेशादसम्भवात्पुरुषमपि[2] चैनमधीयते ॥ २६
अत एव न देवता भूतञ्च ॥ २७
साक्षादप्यविरोधं जैमिनिः ॥ २८
अभिव्यक्तेरित्याश्मरथ्यः ॥ २९
अनुस्मृतेर्बादरिः ॥ ३०
सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१
आमनन्ति चैनमस्मिन् ॥ ३२

---

तृतीयः पादः

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १
मुक्तोपसृप्य[1]व्यपदेशात्[2] ॥ २
नानुमानमतच्छब्दात् ॥ ३
प्राणभृच्च ॥ ४
भेदव्यपदेशात् ॥ ५
प्रकरणात् ॥ ६
स्थित्यदनाभ्याञ्च ॥ ७
भूमा सम्प्रसादादध्युपदेशात् ॥ ८
धर्मोपपत्तेश्च ॥ ९
अक्षरमम्बरान्तधृतेः ॥ १०

---

२६। १ व. श्री म. नि[1] ०नान्नेति० ॥ नि ०नाच्च तथा० ॥
२ बल. ०षविधमपि० ॥
३०। बल. ०र्तरिति बा० ॥
२। १ म. ०सृप्य व्य० ॥ २ रा. श्री. ०देशाच्च ॥
३। रा. श्री. पर्यया० ॥
४। रा. श्री. पूर्ववा ॥
५। नि. बल. ०देशाच्च ॥
६। भा. ०णाच्च ॥

सा च प्रशासनात् ॥ ११
अन्यभावव्यावृत्तेश्च ॥ १२
ईक्षतिकर्मव्यपदेशात्सः ॥ १३
दहर उत्तरेभ्यः ॥ १४
गतिशब्दाभ्या तथा हि दृष्टं लिङ्गञ्च ॥ १५
धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६
प्रसिद्धेश्च ॥ १७
इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ १८
उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९
अन्यार्थश्च परामर्शः ॥ २०
अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१
अनुकृतेस्तस्य च ॥ २२
अपि च स्मर्यते ॥ २३
शब्दादेव प्रमितः ॥ २४
हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५
तदुपर्यपि बादरायणः सम्भवात् ॥ २६
विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७
शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २८
अत एव च नित्यत्वम् ॥ २९
समाननामरूपत्वाच्चा[1]वृत्तावप्यविरोधो[2] दर्शनात्स्मृतेश्च ॥ ३०
मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१

---

१५। बल. ०तथा दृष्टं०। भाष्ये तु ०तथा हि दृष्टं० इत्येव प्रतिभाति ॥
१९। बल. ०विर्भावस्व०। भाष्ये तु ०विर्भूतस्व० इत्येव लभ्यते ॥
२३। रा बल. व. नि.[1] अपि स्म० ॥ नि.[2] अपि तु स्म० ॥
२९। नि. ०एव नि० ॥
३०। क्वचित् समानरूपनामत्वादिति पाठः ॥
३०। १ व ०त्वादावृत्ता०। २ वि. ०विरोधद० ॥ तद्भाष्येतु ०विरोधो द० इत्येव दृश्यते ॥
३१। म ०कारो जै०। भाष्ये तु ०कारं जै० इत्येव ॥

ज्योतिषि भावाच्च ॥ ३२

भावन्तु बादरायणोऽस्ति हि ॥ ३३

शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४

क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७

श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८

कम्पनात् ॥ ३९

ज्योतिर्दर्शनात् ॥

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२

पत्यादिशब्देभ्यः ॥ ४३

---

## चतुर्थः पादः

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १

सूक्ष्मन्तु तदर्हत्वात् ॥ २

तदधीनत्वादर्थवत् ॥ ३

---

३३। म. भावात्तु० ॥

३४। भा. शुद्रस्य० ॥

३५। बल. व. म. ०यत्वावग० ॥ रा. "क्षत्रियत्वगतेश्च" इत्येकं सूत्रम्, "उत्तरत्र चैत्ररथेन लिङ्गात्" इत्यपरं सूत्रम्। श्री. "क्षत्रियत्वावगतेश्च" इति "उत्तरत्र चैत्ररथेन लिङ्गात्" इति च सूत्रद्वयम् ॥

३७। वि. भावानि० ॥

३८। रा. नि. श्री. "श्रवणाध्ययनार्थप्रतिषेधात्" इत्येकं सूत्रम्, "स्मृतेश्च" इत्यपरं सूत्रम् ॥

३९। वि. प्राणः क० ॥

४१। क्वचित् "०न्त्वादिव्यपदेशात्" इत्यपि पाठः ॥

४३। वि. ०भ्यश्च ॥

ज्ञेयत्वावचनाच्च ॥ ४

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६

महद्वच्च ॥ ७

चमसवदविशेषात् ॥ ८

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १०

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११

प्राणादयो वाक्यशेषात् ॥ १२

ज्योतिषैकेषामसत्यन्ने ॥ १३

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४

समाकर्षात् ॥ १५

जगद्वाचित्वात् ॥ १६

जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७

अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८

वाक्यान्वयात् ॥ १९

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २०

उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ २१

अवस्थितेरिति काशकृत्स्नः ॥ २२

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३

अभिध्योपदेशाच्च ॥ २४

साक्षाच्चोभयाम्नानात् ॥ २५

आत्मकृतेः परिणामात् ॥ २६

---

५। म "वदतीति चेन्न प्राज्ञो हि" इत्येकं सूत्रम्, "प्रकरणात्" इत्यपरं सूत्रम्॥

६। वि. ०णामपि चै० ॥

७। क्वचित् "महत्त्वाच्च" इति पाठः ॥

९। वि. श्री. व. ०मास्तु त० ॥

१७। व. लिङ्गादिति० ॥

२०। चि. ०लिङ्गमित्याश्म० ॥

२६। रा. श्री. "आत्मकृतेः" इत्येकं सूत्रम् "परिणामात्" इत्यपरं सूत्रम्।

योनिश्च हि गीयते ॥ २७

एतने सर्वे व्याख्याता व्याख्याताः ॥ २८

---

# द्वितीयोऽध्यायः

## प्रथमः पादः

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥१

इतरेषां चानुपलब्धेः ॥ २

एतेन योगः प्रत्युक्तः ॥ ३

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम ॥ ५

दृश्यते तु ॥ ६

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८

न तु दृष्टान्तभावात् ॥ ९

स्वपक्षदोषाच्च ॥ १०

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥१२

भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४

भावे चोपलब्धेः ॥ १५

सत्त्वाच्चावरस्य ॥ १६

---

२८। म. "व्याख्याताः" इत्येकवारमेव ॥

५। भा. ०गताभ्याम् ॥

११। नि. वि बल म. ०प्यनिर्मोक्ष० ॥ रा "तर्काप्रतिष्ठानादपि" इत्येकं सूत्रम् "अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः इत्यपर" सूत्रम् ॥ श्री. "तर्काप्रतिष्ठानात्" इति, "अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः" इति च सूत्रद्वयम् ॥

१६। रा. श्री. ०चापरस्य ॥

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७
युक्तेः शब्दान्तराच्च ॥ १८
पटवच्च ॥ १९
यथा च प्राणादि ॥ २०
इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१
अधिकं तु भेदनिर्देशात् ॥ २२
अश्मादिवच्च तदनुपपत्तिः ॥ २३
उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४
देवादिवदपि लोके ॥ २५
कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६
श्रुतेस्तु शब्दमूलत्वात् ॥ २७
आत्मनि चैवं विचित्राश्च हि ॥ २८
स्वपक्षदोषाच्च ॥ २९
सर्वोपेता च तद्दर्शनात् ॥ ३०
विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१
न प्रयोजनवत्त्वात् ॥ ३२
लोकवत्तु लीलाकैवल्यम् ॥ ३३
वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४
न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५

---

**१७। रा. नि. श्री. परेखा ॥**

**१८। रा. नि. श्री. पूरवा ॥**

२०। रा. व श्री. नि. बल. ०दिः ॥

२१। रा. ०ताकार०। भ्रम एवार्थमिति लभ्यते ॥

२३। व. ०तदुप० ॥

२५। बल. ०वदिति लो० ॥

२६। वि. ०वशब्द०। बल. ०शब्दव्याको० ॥

२९। बल. नि. ०पक्षेदो० ॥

३०। नि. ०ता सा त०। नि. ०ता च सा त० ॥

३५। म. न कर्मवि०। रा. श्री नि. परेखा। भा. अकस्माद्विभा० ॥

उपपद्यते चाप्युपलभ्यते च ॥ ३६

सर्वधर्मोपपत्तेश्च ॥ ३७

---

## द्वितीयः पादः

रचनानुपपत्तेश्च नानुमानम् ॥ १

प्रवृत्तेश्च ॥ २

पयोऽम्बुवच्चेत्तत्रापि ॥ ३

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४

अन्यत्राभावाच्च न तृणादिवत् ॥ ५

अभ्युपगमेऽप्यर्थाभावात् ॥ ६

पुरुषाश्मवदिति चेत्तथापि ॥ ७

अङ्गित्वानुपपत्तेश्च ॥ ८

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९

विप्रतिषेधाच्चासमञ्जसम् ॥ १०

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११

उभयथापि न कर्मातस्तदभावः ॥ १२

समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३

नित्यमेव च भावात् ॥ १४

रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५

उभयथा च दोषात् ॥ १६

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८

---

३६। रा. श्री. नि. पूर्वेण ॥

१। रा. श्री. पंक्षा।

२। रा. श्री. पूर्वेण ॥

६। बल. ०यप्यर्था० । रा. श्री. इद सूत्र नवमसूत्रान्तरं पठ्यते ॥

७। वि. ०वच्चेत्त० । ॥ भा. ०पत्तः ॥

९। भा. ०तौ श० । रा. श्री. अभ्युपगमेऽप्यर्थाभावात् ॥

१६। व. ०यथापि च ॥ भा. ०यता च० ॥

इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९

उत्तरोत्पादे च पूर्वनिरोधात् ॥ २०

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१

प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२

उभयथा च दोषात् ॥ २३

आकाशे चाविशेषात् ॥ २४

अनुस्मृतेश्च ॥ २५

नासतोऽदृष्टत्वात् ॥ २६

उदासीनानामपि चैवं सिद्धिः ॥ २७

नाभाव उपलब्धेः ॥ २८

वैधर्म्याच्च न स्वप्नादिवत् ॥ २९

न भावोऽनुपलब्धेः ॥ ३०

क्षणिकत्वाच्च ॥ ३१

सर्वथानुपपत्तेश्च ॥ ३२

नैकस्मिन्नसम्भवात् ॥ ३३

एवं चात्माकार्त्स्न्यम् ॥ ३४

न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६

पत्युरसामञ्जस्यात् ॥ ३७

सम्बन्धानुपपत्तेश्च ॥ ३८

---

१९। रा नि श्री. ०यत्वादुपपन्नमिति चेन्न सघातभावानिमित्तत्वात् ॥
भा ०प्रत्ययमन्यत्वादुपपन्नमितिचेन्न सघातभावानिमित्तत्वात् ॥

२१। म ०रोधायौ० ॥

२२। १ म ०प्राप्तेर० ॥

२२। २ भा. ०रसम्भवः ॥

३१। नि. ०कत्वात् ॥ रा. श्री. भा. नास्ति ॥

३२। भा. म नास्ति ॥

३६। बल. ०शेषात् ॥

३८। रा. श्री. नास्ति ॥

अधिष्ठानानुपपत्तेश्च ॥ ३९

करणवच्चेन्न भोगादिभ्यः ॥ ४०

अन्तवत्त्वमसर्वज्ञता वा ॥ ४१

उत्पत्त्यसम्भवात् ॥ ४२

न च कर्तुः करणम् ॥ ४३

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४

विप्रतिषेधाच्च ॥ ४५

---

तृतीयः पादः

न वियदश्रुतेः ॥ १

अस्ति तु ॥ २

गौण्यसम्भवात् ॥ ३

शब्दाच्च ॥ ४

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५

प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६

यावद्विकारन्तु विभागो लोकवत् ॥ ७

एतेन मातरिश्वा व्याख्यातः ॥ ८

असम्भवस्तु सतोऽनुपपत्तेः ॥ ९

तेजोऽतस्तथा ह्याह ॥ १०

आपः ॥ ११

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२

तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३

४५ । भा नास्ति ॥

३ । रा. नि. बल. श्री परेण ॥

४ । रा. नि. बल. श्री. पूर्वेण ॥

६ । रा. श्री. 'प्रतिज्ञाहानिरव्यतिरेकात्' इत्येकं सूत्रम् , 'शब्देभ्यः' इत्यपरं सूत्रम् ॥

१२ । नि. रा. श्री. 'पृथिवी' इत्येकं सूत्रम्', 'अधिकाररूपशब्दान्तरेभ्यः' इत्यपरं सूत्रम् ॥

१३ । नि. ०नात् तु० ॥

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६

नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७

ज्ञोऽत एव ॥ १८

उत्क्रान्तिगत्यागतीनाम् ॥ १९

स्वात्मना चोत्तरयोः ॥ २०

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१

स्वशब्दोन्मानाभ्याञ्च ॥ २२

अविरोधश्चन्दनवत् ॥ २३

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४

गुणाद्वा लोकवत् ॥ २५

व्यतिरेको गन्धवत् ॥ २६

तथा च दर्शयति ॥ २७

पृथगुपदेशात् ॥ २८

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३०

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥ ३२

कर्ता शास्त्रार्थवत्त्वात् ॥ ३३

विहारोपदेशात् ॥ ३४

---

१४। व नास्ति ॥

१६। भा कस्मादुक्त० ॥

२६। वल. नि. श्री. रा परेषा ॥

२७। नि. वल. श्री. तथाहि द० ॥ नि. वल श्री. रा. पूर्वेषा ॥

२९। वल. ०त्वात् त० ॥

३१। म. ०वत्तस्य० ॥

३४। रा. श्री. परेषा ॥ श्री. ०शास्त्र ॥

उपादानात् ॥ ३५

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६

उपलब्धिवदनियमः ॥ ३७

शक्तिविपर्ययात् ॥ ३८

समाध्यभावाच्च ॥ ३९

यथा च तक्षोभयथा ॥ ४०

परात्तु तच्छ्रुतेः ॥ ४१

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२

अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३

मन्त्रवर्णाच्च ॥ ४४

अपि च स्मर्यते ॥ ४५

प्रकाशादिवन्नैवं परः ॥ ४६

स्मरन्ति च ॥ ४७

अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८

असन्ततेश्चाव्यतिकरः ॥ ४९

आभास एव च ॥ ५०

अदृष्टानियमात् ॥ ५१

अभिसन्ध्यादिष्वपि चैवम् ॥ ५२

प्रदेशादिति[1] चेन्नान्तर्भावात्[2] ॥ ५३

३५ । रा. श्री. पूर्वेण ॥ नि ३५—४७ सूत्राणि अमात्परित्यक्तानि ॥

४१। भा. ०रात्तच्छ्रु० ॥

४४ । व. रा. श्री. बल. वि. नि. ०वर्णात् ॥ निम्बार्कीयस्य वेदान्तकौस्तुभकारस्य श्रीनिवासाचार्यस्य तु मते ०वर्णाच्च इत्येव दृश्यते ॥

४५ । बल. व. भा. अपि स्म० ॥

४६। रा. नि. श्री. ०वत्तु नैवं० ॥

५० । नि. भा .०भासा ए० ॥

५२ । वि. ०ष्वप्येवम् ।

५३।१ रा. प्रदेशभेदादि० । २ भा. ०चेन्नान्त० ॥

## चतुर्थः पादः

तथा प्राणाः ॥ १

गौण्यसम्भवात् ॥ २

तत्प्राक्श्रुतेश्च ॥ ३

तत्पूर्वकत्वाद्वाचः ॥ ४

सप्तगतेर्विशेषितत्वाच्च ॥ ५

हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६

अणवश्च ॥ ७

श्रेष्ठश्च ॥ ८

न वायुक्रिये पृथगुपदेशात् ॥ ९

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १०

अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२

अणुश्च ॥ १३

ज्योतिराद्यधिष्ठानन्तु तदामननात् ॥ १४

प्राणवता शब्दात् ॥ १५

तस्य च नित्यत्वात् ॥ १६

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७

भेदश्रुतेः ॥ १८

वैलक्षण्याच्च ॥ १९

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २०

२। रा श्री. परेण। म. अधि "प्रतिज्ञानुपरोधाच्च" ॥
३। रा. श्री पूर्वेण ॥
५। म. ०गतं वि० ॥
१०। भा. ०शिष्यादिभ्यः ॥
१२। वि ०वृत्तेर्म० ॥
१४। भा. ०दाम्नानात्। रा श्री. परेण ॥
१५। रा. श्री. पूर्वेण ॥
१६। नि तस्य नि० ॥
१७। व. तदिन्द्रि० ॥
१८। रा. श्री. नि० परेण ॥
१९। रा श्री. नि. पूर्वेण ॥

मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२

---

## तृतीयोऽध्यायः

### प्रथमः पादः

तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २

प्राणगतेश्च ॥ ३

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६

भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ॥ ७

कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८

चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १०

सुकृतदुष्कृते एवेति तु बादरिः ॥ ११

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३

स्मरन्ति च ॥ १४

अपि च सप्त ॥ १५

२२। त्रि. ०ष्यात् त० ॥

१। बल तद्नन्तर। भा. तदन्तर प्र० ॥

२। भा. च्यात्म० ॥

४। नि ०चेन्नाक्त० ॥

७। भा. ०क्तं चाना० ॥

८। बल. म. "कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम्" इत्येकं सूत्रम्, "यथेतमनेवं च" इत्यपरं सूत्रम्। भा ०नेवम् ॥

९। म. रा नि. बल. श्री ०चेन्न तदुप० ॥

१०। रा. बल. व नि ०पि स० ॥

तत्रापि च तद्व्यापारादविरोधः ॥ १६

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७

न तृतीये तथोपलब्धेः ॥ १८

स्मर्यतेऽपि च लोके ॥ १९

दर्शनाच्च ॥ २०

तृतीयशब्दावरोधः संशोकजस्य ॥ २१

साभाव्यापत्तिरुपपत्तेः ॥ २२

नातिचिरेण विशेषात् ॥ २३

अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥ २४

अशुद्धमिति चेन्न शब्दात् ॥ २५

रेतः सिग्योगोऽथ ॥ २६

योनेः शरीरम् ॥ २७

---

## द्वितीयः पादः

सन्ध्ये सृष्टिराह हि ॥ १

निर्मातारं चैके पुत्रादयश्च ॥ २

मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५

देहयोगाद्वा सोऽपि ॥ ६

---

१६। रा. ॰पि त॰। म. ॰पिच यद्व्या॰ ॥
२१। व ॰तीये श॰ ॥ म. ॰ब्दादविरो॰ ॥
२२। रा श्री. नि. बल भा म. तत्स्वाभा॰ ॥
२३। भा. ॰रेणावि॰ ॥
२४। नि रा व. वि. श्री. बल म ॰ते पू॰ ॥
२६। भा ॰योगाच्च ॥
२७। भा. नास्ति ॥
३। रा. श्री. एतस्मात् पर ५म सूत्रं पठ्यते ॥
४। रा. श्री. ५म सूत्रात्परं पठ्यते ॥
५। रा. श्री. इदं सू॰ तृतीयसूत्रात्परं पठ्यते ॥ भा. ॰ध्यानम्तु ॥

तद्भावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७

अतः प्रबोधोऽस्मात् ॥ ८

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९

मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १०

न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११

न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२

अपि चैवमेके ॥ १३

अरूपवदेव हि तत्प्रधानत्वात् ॥ १४

प्रकाशवच्चावैयर्थ्यात् ॥ १५

आह च तन्मात्रम् ॥ १६

दर्शयति चाथो अपि स्मर्यते ॥ १७

अत एव चोपमा सूर्यकादिवत् ॥ १८

अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २०

दर्शनाच्च ॥ २१

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२

तदव्यक्तमाह हि ॥ २३

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४

---

९। वि. एव च क० ॥

१०। बल. ०सम्प्राप्तिः प० ॥

१२। रा. नि. श्री. भा. भेदा० ॥

१४। बल. ०देव त०। भा अस्थूलमनणवह्रस्वमदीर्घमशब्दमस्पर्शमरूप-मव्ययम् ॥

१५। भा० ०वच्चावै०। बल. व्यर्थम् ॥

१७। व. भा. ०थोपि० ॥

१८। भा. ०एवोप० ॥

१९। भा. ०वाच्च त० ॥

२०। म. ०भाक्त्म०। रा. श्री. परेषा ॥

२१। रा. श्री. पुनश्च ॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५

अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६

उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८

पूर्ववद्वा ॥ २९

प्रतिषेधाच्च ॥ ३०

परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१

सामान्यात्तु ॥ ३२

बुद्ध्यर्थः पादवत् ॥ ३३

स्थानविशेषात्प्रकाशादिवत् ॥ ३४

उपपत्तेश्च ॥ ३५

तथाऽन्यप्रतिषेधात् ॥ ३६

अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७

फलमत उपपत्तेः ॥ ३८

श्रुतत्वाच्च ॥ ३९

धर्मं जैमिनिरत एव ॥ ४०

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१

---

## तृतीयः पादः

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १

भेदान्नेति[1] चेन्नैकस्यामपि[2] ॥ २

---

२५। श्री. ०काशाश्च। बल. "प्रकाशवच्चावैशेष्यात्" इत्येकं सूत्रम्, "प्रकाशश्च कर्मण्यभ्यासात्" इत्यपरं सूत्रम्। म. "प्रकाशादिवच्चावैशेष्यम्" इति "प्रकाशश्च कर्मण्यभ्यासात्" इति च सूत्रद्वयम्॥

२७। भा. ०शात्वहि० ॥

३४। भा. नास्ति ॥

३५। नि. ०पत्तेः। भाष्ये तु "०पत्तेश्च" इत्येव ॥

३६। वि. ०धाच्च ॥

३७। नि. श्रुटितम् ॥

२। [1]बल. भेदादिति०। [2]रा. व. नि. ०चेदेक०। श्री भेदादिति चेदेकस्या० ॥

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥३

दर्शयति च ॥ ४

उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५

अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६

न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८

व्याप्तेश्च समञ्जसम् ॥ ९

सर्वाभेदादन्यत्रेमे ॥ १०

आनन्दादयः प्रधानस्य ॥ ११

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२

इतरेत्वर्थसामान्यात् ॥ १३

आध्यानाय प्रयोजनाभावात् ॥ १४

आत्मशब्दाच्च ॥ १५

आत्मगृहीतिरितरवदुत्तरात् ॥ १६

अन्वयादिति चेत्स्यादवधारणात् ॥ १७

कार्याख्यानादपूर्वम् ॥ १८

समान एवं चाभेदात् ॥ १९

सम्बन्धादेवमन्यत्रापि ॥ २०

न वा विशेषात् ॥ २१

दर्शयति च ॥ २२

---

३ । बज. "स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च" इत्येकं सूत्रम्, "सववच्च तन्नियमः" इत्यपरं सूत्रम् ॥

म. "स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च" इत्येकं सूत्रम्, "सलिलवच्च तन्नियमः" इत्यपरं सूत्रम् ॥

७ । भा. न च प्र० ॥

१० । वि. १०—२१ द्वादशसूत्राणि पादस्यान्तेऽपि पठितानि ॥

१६ । भा. ०हीतेरि० ॥

१८ । भा. ०पूर्वः ॥

२१ । वि. १०—२१ सूत्राणि पादस्यान्तेऽपि पठितानि ॥

सम्भृतिद्युव्याप्त्यपि चातः ॥ २३
पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४
वेधाद्यर्थभेदात् ॥ २५
हानौतूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६
साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये ॥ २७
छन्दत उभयाविरोधात् ॥ २८
गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९
उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३०
अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१
यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२
अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३
इयदामननात् ॥ ३४
अन्तराभूतग्रामवत्स्वात्मनः ॥ ३५
अन्यथाभेदानुपपत्तिरिति[१] चेन्नोपदेशान्तरवत्[२] ॥ ३६
व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७
सैव हि सत्यादयः ॥ ३८

---

२३। बल ०तिद्यु व्या०। भा. ०तिवद्युव्या० ॥
२४। नि. श्री. भा. ०यामपि चे० ॥
२७। व. सम्पराये ॥
२९। रा. ०यथाऽन्य०। श्री परत्र ॥
३०। म ०ब्धेर्लौकिकवत्। श्री पूर्वत्र ॥
३१। बल ०सर्वेषामविरोधाच्छब्दा० ॥
श्री. नि. रा. ०सर्वेषाम०। रा श्री परत्र ॥
३२। रा. श्री पूर्वत्र। नि ३२--३३ त्रुटितं ॥
३३। वि. ०त्ववबोध०। भाष्ये तु ०त्ववबोध० इति दृश्यते। भा. ०त्वविरो०।
नि. त्रुटितम् ॥
३४। भा. ईयदा० ॥
३५। रा. नि. श्री. परेषा। भा. शाङ्करभाष्यानुरोधात्सूत्रद्वयमिदं वस्तुत एकमेव।
३६। वि. ०पत्तेरि०[१]। ०देशवत्[२]। रा. श्री. नि. पूर्वत्र ॥

कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९

आदरादलोपः ॥ ४०

उपस्थितेऽतस्तद्वचनात् ॥ ४१

तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२

प्रदानवदेव तदुक्तम् ॥ ४३

लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४

पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ ४५

अतिदेशाच्च ॥ ४६

विद्यैव तु निर्द्धारणात् ॥ ४७

दर्शनाच्च ॥ ४८

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५०

न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२

एक आत्मनः शरीरे भावात् ॥ ५३

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५

मन्त्रादिवद्वाऽविरोधः ॥ ५६

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७

नानाशब्दादिभेदात् ॥ ५८

---

३९। श्री. कामादयस्तत्र तत्र ॥

४१। भा. °तेऽतद्व° ॥

४५। वि. °ल्पप्र° ॥

४७। वल. °नु तन्नि° । रा. नि. श्री. परेण ॥

४८। रा. नि. श्री. पूर्वेण ॥

५०। वल. "अनुबन्धादिभ्यः" इत्येकं सूत्रम्, "प्रज्ञान्तरपृथक्त्ववद् दृष्टिश्च तदुक्तम्" इत्यपरम् ॥ म. "अनुबन्धादिभ्यः" इति "प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्" इति च सूत्रद्वयम् ॥

५४। रा. नि. वल. श्री. भा. °द्भावभा° ॥

विकल्पोऽविशिष्टफलत्वात् ॥ ५९

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६०

अङ्गेषु यथाश्रयभावः ॥ ६१

शिष्टेश्च ॥ ६२

समाहारात् ॥ ६३

गुणसाधारण्यश्रुतेश्च ॥ ६४

न वा तत्सहभावाश्रुतेः ॥ ६५

दर्शनाच्च ॥ ६६

---

चतुर्थः पादः

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १

शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २

आचारदर्शनात् ॥ ३

तच्छ्रुतेः ॥ ४

समन्वारम्भणात् ॥ ५

तद्वतो विधानात् ॥ ६

नियमाच्च ॥ ७

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८

तुल्यन्तु दर्शनम् ॥ ९

असार्वत्रिकी ॥ १०

विभागः शतवत् ॥ ११

अध्ययनमात्रवतः ॥ १२

नाविशेषात् ॥ १३

---

६०। वि. नास्ति ॥

६५। नि. ०भावोऽश्रु० ॥

२। वि. ०था ह्यन्ये० ॥

४। वि. ०तेश्च ॥

७। रा. श्री ०मात् ॥

८। वि. भा. ०स्यैव त० ॥

९। व. ०ल्यं द० ॥

स्तुतयेऽनुमतिर्वा ॥ १४

कामकारेण चैके ॥ १५

उपमर्दं च ॥ १६

ऊर्ध्वरेतःसु च शब्दे हि ॥ १७

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९

विधिर्वा धारणवत् ॥ २०

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१

भावशब्दाच्च ॥ २२

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३

तथा चैकवाक्यतोपबन्धात् ॥ २४

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६

शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेय-
त्वात् ॥ २७

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८

अबाधाच्च ॥ २९

अपि च स्मर्यते ॥ ३०

शब्दश्चातोऽकामकारे ॥ ३१

---

१६। वि. अपि ॥

१८। रा. नि. श्री ०नाचाप० ॥

२२। व. नास्ति ॥

२३। भा. ०वार्थ इति० । पंक्षा ॥

२४। रा. वाक्योप० । भा. पूर्वंषा ॥

२६। बल. ०श्रुति० । भाष्ये तु ०श्रुतेर इत्येव ॥

२७। बल. ०तस्तु स्या० । वि. ०पित० । ०मप्यव० ॥

२८। वि ०तिप्रा० ॥

३०। रा. व. बल. अपि स्म० ॥

३१। नि. शब्दाश्चा० । भाष्ये तु शब्द० इत्येव । रा. ०श्चात्याका० । बल. ०मचारे० ॥

विहितत्वाच्चाश्रमकर्मापि ॥ ३२

सहकारित्वेन च ॥ ३३

सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४

अनभिभवं च दर्शयति ॥ ३५

अन्तरा चापि तु तद्दृष्टेः ॥ ३६

अपि च स्मर्यते ॥ ३७

विशेषानुग्रहश्च ॥ ३८

अनस्त्वितरज्ज्यायो[1] लिङ्गाच्च[2] ॥ ३९

तद्भूतस्य तु[1] नातद्भावो जैमिनेरपि[2] नियमातद्रूपा[3]भावेभ्यः ॥ ४०

न चाधिकारिकमपि[1] पतनानुमानात्तदयोगात् ॥ ४१

उपपूर्वमपि[1] त्वेके भावमशनवत्तदुक्तम् ॥ ४२

बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५

श्रुतेश्च ॥ ४६

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८

मौनवदितरेषामप्युपदेशात् ॥ ४९

अनाविष्कुर्वन्नन्वयात् ॥ ५०

---

३४। बल. ०तत्र वो० ॥

३७। रा. व बल. अपि स्म० ।

३९। १ म. ०रज्यायो० । २ ०लिङ्गात् , भाष्ये "०लिङ्गाच्च" इत्येव प्रतिभाति ॥

४०। १ वि. ०स्य ना० । २ व. भा. ०मिनिर० । नि[3] वि श्री रा. भा. ०मात्तद्रू० ॥

४१। १ वि. ०मपि यजना० ॥

४२। १ रा. श्री. ०मपीत्येके० । ४२। भा. नास्ति ॥

४३। रा. ०यथापि० । बल. ०थास्मृ० ॥

४६। रा. श्री. नि. भा. नास्ति ॥

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२

---

# चतुर्थोऽध्यायः

## प्रथमः पादः

आवृत्तिरसकृदुपदेशात् ॥ १

लिङ्गाच्च ॥ २

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥३

न प्रतीके न हि सः ॥ ४

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६

आसीनः सम्भवात् ॥ ७

ध्यानाच्च ॥ ८

अचलत्वं चापेक्ष्य ॥ ९

स्मरन्ति च ॥ १०

यत्रैकाग्रता तत्राविशेषात् ॥ ११

आप्रायणात्[1] तत्रापि[2] हि दृष्टम् ॥ १२

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ[1] तद्व्यपदेशात्[2] ॥ १३

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५

---

५१। रा वि. श्री. व बल ०मप्र०। नि. ०मप्रस्तुतं प्र०। भा. "ऐहिकमप्रस्तुतं प्रतिबन्धेन दर्शनात्" ॥

४। भा. प्रती० ॥

११। भा. ०तत्र वि० ॥

१२। १ रा. नि आप्रयाणा०। २ वि. ०तथाहि० ॥

१३। १ म. ०पूर्वाघतोर०। २ वि. ०तद्व्द्व्यप०। भाष्ये "०तद्व्यपदेशात्" इत्येव प्रतीकत्वेन गृहीत दृश्यते ॥

१४। बल. ०मश्लेषः० ॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६

अतोऽन्यापि ह्येकेषामुभयोः ॥ १७

यदेव विद्ययेति हि ॥ १८

भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९

## द्वितीय पादः

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १

अत एव च सर्वाण्यनु ॥ २

तन्मनः प्राण उत्तरात् ॥ ३

सोऽध्यक्षे तु तदुपगमादिभ्यः ॥ ४

भूतेषु तच्छ्रुतेः ॥ ५

नैकस्मिन्दर्शयतो हि ॥ ६

समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७

तदापीतेः संसारव्यपदेशात् ॥ ८

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९

नोपमर्देनातः ॥ १०

अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११

प्रतिषेधादिति चेन्न शारीरात् ॥ १२

१६। नि. ०दि त०। वि ०तु तत्तत्का० ॥
१८। भा. नास्ति. ॥
१९। रा. श्री व नि बल. ०त्वाऽथ स० ॥
२। नि. वि. व. बल ०एव स० ॥
४। श्री. ०क्षेषु त० ॥
५। वि. .म भा. भूतेष्वतः श्रुतेः ॥
७। वि. ०ना वा सृ० ॥
८। म. तदपी० ॥
१०। म. "०मर्द्द नातः" भाष्ये "०मर्द्द नातः" इत्ये व दृश्यते ॥
११। रा. श्री व. नि बल. ०तेरूष्मा ॥
१२। रा. श्री नि. भा. परेषा ॥

स्पष्टो ह्येकेषाम् ॥ १३

स्मर्यते च ॥ १४

तानि परे तथा ह्याह ॥ १५

अविभागो वचनात् ॥ १६

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृति-
योगाच्च हार्दानुगृहीतःशताधिकया ॥ १७

रश्म्यनुसारी ॥ १८

निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९

अतश्चायनेऽपि दक्षिणे ॥ २०

योगिनः प्रति[1] च स्मर्यते[2] स्मार्ते चैते ॥ २१

---

## तृतीयः पादः

अर्चिरादिना तत्प्रथितेः ॥ १

वायुमब्दादविशेषविशेषाभ्याम् ॥ २

तडितोऽधिवरुणः सम्बन्धात् ॥ ३

आतिवाहिकास्तल्लिङ्गात् ॥ ४

उभयव्यामोहात्तत्सिद्धेः ॥ ५

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७

विशेषितत्वाच्च ॥ ८

---

१३। रा. श्री नि भा. पूर्वया ॥
१४। म. स्मार्य्य० ॥
१९। म "निशि नेति चेन्न सम्बन्धात्" इति "यावद्देहभावित्वाद्दर्शयति च" इति च सूत्रद्वयम् ॥
२१। १ व. नि. बल. श्री. ०प्रति स्म० । २ रा ०स्मर्य्यते० ॥
२। म. वायुमब्दा० ॥
३। रा. श्री. तडितो० । व. "अधि वरुणाच्चाधीन्द्रप्रजापती" इत्यपरं सूत्रम् ॥
४। म. ०हिकस्त० । वि. ०हिकस्त०, भाष्ये "०हिकास्त०" इत्येव लक्ष्यते ॥
५। रा. नि श्री. भा. नास्ति ॥

सामीप्यात्तु तद्व्यपदेशः ॥ ६

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १०

स्मृतेश्च ॥ ११

परं जैमिनिर्मुख्यत्वात् ॥ १२

दर्शनाच्च ॥ १३

न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४

अप्रतीकालम्बनान्नयतीति[1] बादरायण[2] उभयथा[3] दोषात्तत्क्रतुश्च ॥ १५

विशेषञ्च दर्शयति ॥ १६

---

## चतुर्थः पादः

सम्पद्याविर्भावः स्वेन शब्दात् ॥ १६

मुक्तः प्रतिज्ञानात् ॥ २

आत्मा प्रकरणात् ॥ ३

अविभागेन दृष्टत्वात् ॥ ४

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५

चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६

एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७

संकल्पादेव तु तच्छ्रुतेः ॥ ८

अत एव चानन्याधिपतिः ॥ ६

६। नि. ०तदुप० भाष्ये ०तद्व्यप० ॥

१४। रा. श्री. ०प्रत्यभि० ॥

१५। वि. अप्रतिका०। १ म. ०ति स बा०। २ रा यथा च दो०। ३ बल. श्री. म. यथा च दो० ॥

१। वि. म. सम्पाद्या०। भाष्ये 'सम्पद्या०' इत्यं व प्रतिभाति ॥

२। वि. मुक्तः परिज्ञा०, भाष्ये "मुक्तः प्रति ज्ञा०" इत्येव ॥

४। म. ०गेनैव दृ० ॥

६। व. ०दात्मकत्वा० ॥

८। व. ०व च त०। नि. रा. ०देव त० ॥

६। नि. वि ०एवान० ॥

अभावं बादरिराह ह्येवम् ॥ १०

भावं[1] जैमिनिर्विकल्पामननात्[2] ॥ ११

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२

तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३

भावे जाग्रद्वत् ॥ १४

प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि[1] ॥ १६

जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७

प्रत्यक्षोपदेशादिति[1] चेन्नाधिकारिकमण्डलस्थोक्तेः[2] ॥ १८

विकारावर्त्ति च तथाहि स्थितिमाह ॥ १९

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २०

भोगमात्रसाम्यलिङ्गाच्च ॥ २१

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२

---

१०। बल. अभावे वा०। भाष्ये 'अभावं०' इत्येव दृश्यते ॥

११। १ बल. 'आह ह्येवं० जै०'। ११। २ वि. ०र्निर्विक० ॥

१३। व. तत्त्वभा०। म. तत्त्वाभा० ॥

१६। १ स्वाप्य स०। २ म. बल. ०पेक्ष्यमा० ॥

१७ म. "जगद्व्यापारवर्जम्" इत्येकं सूत्रम्, "प्रकरणादसंनिहितत्वाच्च" इत्यपरं सूत्रम्। बल. ०तत्त्वात् ॥

१८। १ नि. ०शान्नेति०। २ बल. ०लस्योक्तः, भाष्ये "०लस्थोक्तः" इत्येव म. ०लस्योक्तेः ॥

१९। वि. ०रावर्त्ति० ॥

# सूत्रसूची

तारकांकितानि सूत्राणि टीप्पण्यां द्रष्टव्यानि

आ

आकाशस्तल्लिङ्गात् १· १· २२
आकाशे चाविशेषात् २· २· २४
आकाशोऽर्थान्तर १· ३· ४१
आचारदर्शनात् ३· ४· ३
आतिवाहिकास्तल्लिङ्गात् ४· ३· ४
आत्मकृतेः परिणामात् १· ४· २६
आत्मगृहीतिरितरवदुत्तरात् ३· ३· १६
आत्मनि चैवं विचित्रा २· १· २८
आत्मशब्दाच्च ३· ३· १५
आत्मा प्रकरणात् ४· ४· ३
आत्मेति तूपगच्छन्ति ४· १· ३
आदरादलोपः ३· ३· ४०
आदित्यादिमतय ४· १· ६
आध्यानाय प्रयोजना ३· ३· १४
आनन्दमयोऽभ्यासात् १· १· १२
आनन्दादयः प्रधानस्य ३· ३· ११
आनर्थक्यमिति चेन्न ३· १· १०
आनुमानिकमप्येकेषा १· ४· १
आपः २· ३· ११
आप्रायणात्तत्रापि हि ४· १· १२
आभास एव च २· ३· ५०
आमनन्ति चैनमस्मिन् १· २· ३२
आर्त्विज्यमित्यडुलौमि ३· ४· ४५
आवृत्तिरसकृदुपदेशात् ४· १· १
आसीनः सम्भवात् ४· १· ७
आह च तन्मात्रम् ३· २· १६

इ

इतरपरामर्शात्स १· ३· १८
इतरव्यपदेशाद्धिता २· १· २१
इतरस्याप्येवमसं ४· १· १४
इतरेतरप्रत्ययत्वादिति २· २· १९
इतरे त्वर्थसामान्यात् ३· ३· १३
इतरेषां चानुपलब्धेः २· १· २
इयदामननात् ३· ३· ३४

ई

ईक्षतिकर्मव्यपदेशात्सः १· ३· १३
ईक्षतेर्नाशब्दम् १· १· ५

उ

उत्क्रमिष्यत एवं १· ४· २१
उत्क्रान्तिगत्यागतीनाम् २· ३· १९
उत्तराच्चेदाविर्भूतस्वरूपस्तु १· ३· १९
उत्तरोत्पादे च पूर्वनिरोधात् २· २· २०
उत्पत्त्यसम्भवात् २· २· ४२
उदासीनानामपि चैवं २· २· २७
उपदेशभेदान्नेति १· १· २७
उपपत्तेश्च ३· २· ३५
उपपद्यते चाप्युपलभ्यते च २· १· ३६
उपपन्नस्तल्लक्षणा ३· ३· ३०
उपपूर्वमपि त्वेके ३· ४· ४२
उपमर्दं च ३· ४· १६
उपलब्धिवदनियमः २· ३· ३७
उपसंहारदर्शनान्नेति २· १· २४
उपसंहारोऽर्थाभेदा ३· ३· ५
उपस्थितेऽतस्तद्वचनात् ३· ३· ४१

ह



---

# शब्दसूची

# सूत्रसंख्या

| प्रथमे अध्याये | निम्बार्कः | बलदेवः | भास्करः | मध्वः | रामानुजः | वल्लभः | विज्ञान-भिक्षुः | शङ्करः | श्रीकण्ठः |
|---|---|---|---|---|---|---|---|---|---|
| १ पादे | ३२ | ३१ | ३१ | ३१ | ३२ | ३१ | ३१ | ३१ | ३२ |
| २ पादे | ३३ | ३३ | ३२ | ३२ | ३३ | ३२ | ३२ | ३२ | ३३ |
| ३ पादे | ४४ | ४३ | ४३ | ४३ | ४४ | ४३ | ४३ | ४३ | ४४ |
| ४ पादे | २८ | २८ | २७ | २९ | २९ | २८ | २८ | २८ | २९ |
| समष्टिः | १३७ | १३५ | १३३ | १३५ | १३८ | १३४ | १३४ | १३४ | १३८ |

| द्वितीये अध्याये | निम्बार्कः | बलदेवः | भास्करः | मध्वः | रामानुजः | वल्लभः | विज्ञान-भिक्षुः | शङ्करः | श्रीकण्ठः |
|---|---|---|---|---|---|---|---|---|---|
| १ पादे | ३५ | ३६ | ३७ | ३७ | ३६ | ३७ | ३७ | ३७ | ३६ |
| २ पादे | ४५ | ४५ | ४४ | ४५ | ४२ | ४५ | ४५ | ४५ | ४२ |
| ३ पादे | ५२ | ५१ | ५३ | ५३ | ५२ | ५३ | ५३ | ५३ | ५२ |
| ४ पादे | २१ | २२ | २२ | २३ | १९ | २२ | २२ | २२ | १९ |
| समष्टिः | १५३ | १५४ | १५६ | १५८ | १४९ | १५७ | १५७ | १५७ | १४९ |

| तृतीये अध्याये | निम्बार्कः | बलदेवः | भास्करः | मध्वः | रामानुजः | वल्लभः | विज्ञान-भिक्षुः | शङ्करः | श्रीकण्ठः |
|---|---|---|---|---|---|---|---|---|---|
| १ पादे | २७ | २८ | २६ | २८ | २७ | २७ | २७ | २७ | २७ |
| २ पादे | ४१ | ४२ | ४१ | ४२ | ४० | ४१ | ४१ | ४१ | ४० |
| ३ पादे | ६४ | ६८ | ६६ | ६८ | ६४ | ६६ | ६६ | ६६ | ६४ |
| ४ पादे | ५१ | ५१ | ५० | ५१ | ५१ | ५१ | ५२ | ५२ | ५१ |
| समष्टिः | १८३ | १८९ | १८३ | १८९ | १८२ | १८५ | १८६ | १८६ | १८२ |

## सूत्रसंख्या

| चतुर्थे अध्याये | निम्बार्क | बलदेवः | भास्करः | मध्वः | रामानुजः | वल्लभः | विज्ञान-भिक्षुः | शङ्करः | श्रीकण्ठः |
|---|---|---|---|---|---|---|---|---|---|
| १ पादे | १९ | १९ | १८ | १९ | १९ | १९ | १९ | १९ | १९ |
| २ पादे | २० | २१ | २० | २२ | २० | २१ | २१ | २१ | २० |
| ३ पादे | १५ | १६ | १५ | १६ | १५ | १७ | १६ | १६ | १५ |
| ४ पादे | २२ | २२ | २२ | २३ | २२ | २२ | २३ | २२ | २२ |
| समष्टिः | ७६ | ७८ | ७५ | ८० | ७६ | ७९ | ७९ | ७८ | ७६ |

## सूत्रसमष्टिः

निम्बार्कस्य ५४९। बलदेवस्य ५५६। भास्करस्य ५४७। मध्वस्य ५६२। रामानुजस्य ५४५। वल्लभस्य ५५५। विज्ञानभिक्षोः ५५६। शङ्करस्य ५५५। श्रीकण्ठस्य ५४४।